सननियमनव्यापनैरात्मनस्ते शेषोऽशेषः प्रपञ्चो वपुरिति भवतस्त-
स चाभेदवादाः । सर्वं खल्वैतदात्म्यं सकलमिदमहं तत्त्वमस्येवमा-
द्याः व्याख्याता रङ्गधामप्रवण ! विजयिभिर्वैदिकैस्सार्वभौमैः॥२४॥
सराजकमराजकं पुनरनेकराजं तथा यथाभिमतराजकं जगदिदं जज-
वपुर्जडाः, । जगावचवश्चित्रतातरतमत्वतर्कोङ्किका श्रुतिश्चिदचिती
त्वया वरद ! नित्यराजन्वती ॥ २५ ॥ ब्रह्माद्यास्सृज्यवर्गे भ्रुकुटि-
भटतयोद्धाटिता नावतारप्रस्तावे तेन न त्वं न च तव, सदृशा वि-
श्वमेकातपत्रम् । लक्ष्मीनेत्रा त्वयेति श्रुतिमुनिवचनैस्त्वत्परैरर्पयामः
श्रीरङ्गाम्भोधिचन्द्रोदय ! जलमुचितं वादिकौतस्कुतेभ्यः ॥ २६ ॥
दोषोपधावधिसमातिशयानसंख्यानिर्लेपमङ्गलगुणौघदुघाष्षडेताः ।
ज्ञानैश्वरीशकनवीर्यबलार्चिषस्त्वां रङ्गेश ! भास इव रत्नमनर्घयन्ति
॥ २७ ॥ युगपदनिशमक्षैः स्वैः स्वतो वाऽक्षकार्ये नियममनियमं
वा प्राप्य रङ्गाधिराज ! । करतलवदशेषं पश्यसि स्वप्रकाशं तदवरण-
ममोघं ज्ञानमाम्नासिषुस्ते ॥ २८ ॥ नयनश्रवणो दृशा शृणोषि अथ
ते रङ्गपते ! महेशितुः । करणैरपि कामकारिणः घटते सार्वपथीन-
मीक्षणम् ॥ २९ ॥ सार्वज्ञेनाज्ञमूलं जगदभिदधतो वारितास्साक्षि ।
मात्रात् सांख्योक्तात्कारणं त्वां पश्यति भगवन्नैश्वरी रङ्गशायिन् ! ।
अप्रयोऽन्यैः स्वतन्त्रोऽप्रतिहति सदसत्कर्मचैश्या विचित्रं यत्रेच्छा
लेशतस्त्वं युगपदगणयन् विश्वमाविश्वकर्थ ॥ ३० ॥ कार्येऽनन्ते
स्वतनुभुवस्त्वामुपादानमाहुः सा ते शक्तिस्सुकरमितरच्चेति वेलां
विलंघ्य । इच्छा यावद्विहरति सदा रङ्गराजानपेक्षा सैवेशानादति-
शयकरी सोर्णनाभौ विभाव्या ॥ ३१ ॥ स्वमहिमस्थितिरीश !
भृशक्रियोऽप्यकलितश्रम एव बिभर्षि यत् । वपुरिव स्वमशेषमिदं
वलं तव पराश्रितकारणवारणम् ॥ ३२ ॥ भगनाभिगन्ध इव यत्स-
कलार्थान् निजसन्निधेरविकृतो विकुणोपि । प्रियरङ्ग ! वीर्यमिति तत्तु
वदन्ते सविकारकारणमितो विनिवार्यम् ॥ ३३ ॥ सहकार्यपेक्षमपि

ज्ञातुमिह त्वदनपेक्षकर्तृता । रङ्गधन ! जयति तेज इति प्रणतार्तिजित् प्रतिभटाभिभावुकम् ॥ ३४ ॥ मर्त्योत्थायं विरिञ्चावधिकमुपरि चोत्प्रेक्ष्य मीमांसमाना रङ्गेन्द्रानन्दवल्ली तत्र गुणनिवहं यावेनानन्दपूर्वम् । न स्वार्थं स्प्रष्टुमीष्टे स्खलति पथि परं मूकलायं निलिल्ये हन्तैतं त्वद्गुणानामवधिगमनयोः का कथा चित्तवाचोः ॥ ३५ ॥ त्वयायिपत ये गुणा निचिनिवायमारण्यकेष्वमी प्रदिमचातुरीप्रणतचापलक्षान्तयः । दयाविजयसौन्दरीप्रभृतयोऽपि रत्नौघवत् जगद्व्ययरहितक्षमा वरद ! रङ्गरत्नाकरे ॥ ३६ ॥ यमाश्रित्यैवान्मंभरय इव ते सद्गुणगणाः प्रथन्ते सोऽनन्तस्तवनशकनशान्तोदितदशः । त्वमेव त्वां वेत्थ स्तिमितवितरङ्गं वरद ! भोः स्वसंवेद्यस्वारमद्वयमबहुलानन्दभरितम् ॥ ३७ ॥ आम्नायेष्वरगन्धमीशसदृशंमन्यास्तवेन्द्रादयो मुह्यन्ति त्वमनाविलो निरवधेर्भूम्नः कणेहत्य यत् । चित्रीयेमहि नात्र रङ्गरसिक ! त्वं त्वन्महिम्नः परः वैपुल्यान्महितः स्वभाव इति वा किंधाम सात्म्यं न ते ॥ ३८ ॥ पाड्गुण्याद्वासुदेवः पर इति स भवन् मुक्तभोग्यो बलाढ्यात् बोधात् सङ्कर्षणस्त्वं हरसि वितनुषे शास्त्रमैश्वर्यवीर्यात् । प्रद्युम्नःसर्गधर्मौ नयसि च भगवञ्छक्तितेजोऽनिरुद्धः बिभ्राणः पासि तत्त्वं गमयसि च तथा व्यूह रङ्गाधिराज ! ॥ ३९ ॥ जाग्रत्स्वप्नाद्यसन्नमतुरीयप्रायध्यातृक्रमवदुपास्यः । सर्वाभिस्त्वत्सद्वयरितदैः चातुर्व्यूह्यं वहसि च धर्मा ॥ ४० ॥ अचिदविशेषितान् प्रलयसीमनि संसरतः करणकलेवरैर्घटयितुं दयमानमनाः । वरद ! निजेच्छयैव परवानकरोः प्रकृतिं महदभिमानभूतकरणावलिकोरकिणीम् ॥ ४१ ॥ निम्नोन्नतं च करुणं च जगद्विचित्रं कर्म व्यपेक्ष्य सृजतस्तव रङ्गशायिन् । वैषम्यनिर्घृणतयोर्न खलु प्रसक्तिः तद्ब्रह्मसूत्रमचिवाः श्रुतयो गृणन्ति॥४२॥ स्वाधीने सहकारिकारणगणे कर्तुश्वरीरेऽथवा भोतुः स्वानुविधापराधविषयो राज्ञो यथा शासितुः । दातुर्वाऽधिजने कटाक्षणमिव

वैष्णवभोग्यलिप्सया वा ॥ ५४ ॥ उन्मूल्याऽऽद्दर मन्दराद्रिमहिना तं सम्मथनाम्बुना दोर्भिश्चक्रमालिङ्ग्य दधिनिर्मथं मथनाऽम्बुधिम् । श्रीरङ्गेश्वर ! चन्द्रकौस्तुभसुधापूर्वं गृहाणेति ते कुर्वाणस्य फलेग्रहिर्हि कमलालाभेन सर्वः श्रमः ॥ ५५ ॥ देवीहस्ताम्बुजेभ्यश्चरणकिसलये संवहद्भ्योऽपहृत्य प्रत्यस्यानन्तभोगं झटिति चलपुटे चक्षुषी विस्तृणानः । आक्षिप्योरश्च लक्ष्म्याः स्तनकलशकनत्कुङ्कुमस्तोमपङ्कादेनः श्रीरङ्गधामा गजपतिघुषिते व्याकुलः स्तात् पुरो नः ॥ ५६ ॥ अतन्त्रितचमूपतिप्रहितहस्तमस्वीकृतप्रणीतमणिपादुकं किमिति चाकुलान्तःपुरम् । अवाहनपरिष्क्रियं पतगराजमारोहतः करिप्रवरबृंहिते भगवतस्त्वरायै नमः ॥ ५७ ॥ यं पश्यन्निश्चधुर्यां धियमसकृदथो मन्थरां मन्यमानः हुंकारास्फालनाधिग्रहतिभिरपि तं तार्क्ष्यमभ्यक्षिपस्त्वम् । किञ्चोदश्चन्नुदस्य त्वमथ गजपतेर्बृंहिते जृम्भमाणे देव ! श्रीरङ्गबन्धो ! प्रणमति हि जने कान्दिशीको दया ते ॥ ५८ ॥ श्रीरङ्गेशय ! शरणं ममासि वात्याव्यालोलत्कमलतटाकताण्डवेन । सम्भूयाम्बरमयथायथं दधानः धिङ्मामित्यनुगजगर्जमाजगन्थ ॥ ५९ ॥ मीनतनुस्त्वं नावि निधाय स्थिरचरपरिकरमनुमनु भगवन् ! । वेदमनाभिस्रोक्तिविनिर्दिरकलितलयभयजनममुमवहः ॥ ६० ॥ श्रीनयनाभोक्षामुरदीर्घप्रविपुलसुरुचिरशुचिशिशिरवपुः । पक्षनिगीर्णोद्गीर्णमहाब्धिस्थलजलविहरणरतगतिरचरः ॥ ६१ ॥ चकर्थ श्रीरङ्गिन्निखिलजगदाधारकमठो भवन् धर्मान् कूर्मः पुनरमृतमन्थाचलधरः । जगन्थ श्रेयस्त्वं मरकतशिलापीठललितं चलादुग्धच्छस्मीपदकिसलयन्यासमुलभम् ॥ ६२ ॥ हृदि सुररिपोर्दंष्ट्रोत्खाते क्षिपन् प्रलयार्णवं क्षितिकुचतटीमर्चन् दैत्यास्रकुङ्कुमचर्चया । स्फुटधुतसटाश्रम्यद्रक्षस्तयोन्मुखबृंहितः शरणमसि मे रङ्गिंस्त्वं मूलकोलतनुर्भवन् ॥ ६३ ॥ नृहरिदशयोः पश्यन्नोत्पत्तिकं घटनाद्भुतं नरमुत हरिं दृष्ट्वैकैकं समुद्विजतां जनः, । इति किल

सिताक्षीरन्यायेन सङ्गमिताङ्कं स्फुटसटमहादंष्ट्रं रङ्गेन्द्रसिंहमुपास्महे ॥ ६४ ॥ द्विपाणद्वेपोद्यन्नयनवनवह्निप्रशमनश्रमछ्लक्ष्मीवक्त्रप्रहितमधुगण्डूषसुषमः । नखक्षुण्णारातिक्षतजपटलैराप्लुतसटाच्छटास्कन्धो ऽन्ये दुरितमिह पुंस्पश्ववदनः ॥६५॥ नखाग्रग्रस्तेऽपि द्विपति निरन्ये दुरितमिह पुंस्पश्ववदनः । विरुद्धे वैयभक्तद्रुहि रुषः प्रकर्षाद्द्विगुणतद्द्विगुणपरिणाहोत्कटतनुः । विरुद्धे वैयश्रीगुणघटितसमानाधिकरणे नृसिंहत्वे विग्रहरद ! विभरामासिथ जगत् ॥ ६६ ॥ दैत्यौदार्येन्द्रयाच्ञाविहतिमपनयन् वामनोऽर्थी त्वमासीः विक्रान्ते पादपद्मे त्रिजगदणुसमं पांसुलीकृत्य लिख्ये । नाभीपद्मश्च मानक्षममिव भुवनग्राममन्यं सिसृक्षुः तस्थौ रङ्गेन्द्र ! वृत्ते तव जयमुखरो डिण्डिमस्तत्र वेदः ॥ ६७ ॥ भवान् रामो भूत्वा परशुपरिकर्मा भृगुकुलादलावीत्क्षपालान् पितृगणमताप्सीत्तदसृजा । भुवो भाराक्रान्तं लघु तलमुपाचीकलपदिति द्विषामुग्रंपश्योऽप्यनघ ! मम माजीगणदघम् ॥६८॥ मनुजसमयं कृत्वा नाथावतेरिथ पन्नगा क्वचन विपिने सा चेदन्तर्धि नर्म विनिर्ममे । किमथ जलधिं यद्ध्वा रक्षो विधीशवरोद्धतं वलिमुखकुलोच्छिष्टं कुर्वन् रिपुं निरपत्रयः ॥ ६९ ॥ यदूद्भूते विजयापदानगणना कालिन्दुन्ताङ्कुरैः यच्छ्लेपलवोऽपि कालियभुवे कोलाहलायाभवत् । दूरेणापि च यस्य गोपवनिताः कृष्णागसां व्यसरन् तं त्वां क्षेमकृपीवलं हलधरं रङ्गेश ! भक्तास्महे ॥ ७० ॥ आकण्ठवारिभरमन्थरमेघदेश्यं पीताम्बरं कमललोचनपश्यहेति । ब्रह्मस्तनंधयमयाचत देवकी त्वां श्रीरङ्गकान्त ! सुतकाम्यति काऽपरैवम् ॥ ७१ ॥ शैलोऽग्निश्च जलांवभूव मुनयो मूढांबभूवुर्जडाः प्राज्ञामासुरगास्सगोपममृतामासुर्महाशीविषाः । गोप्याश्चास्सहृजांबभूवुरपरे त्वन्यांबभूवुः प्रभो ! त्वं तेष्वन्यतमांबभूविथ मन्त्रद्रेणुकगोन्माथने ॥ ७२ ॥ कल्किततनुर्धर्मी लयिष्यन् कलिकलुषान् विलुनासि पुरा त्वम् । रङ्गनिकेत ! लुनीहि लुनीहीत्यखिलमरुन्तुदमद्य लुनीहि ॥७३॥ आस्तां ते गुणराशिवद्गुणपरीवाहात्मनां

जन्मनां संख्या भौमनिकेतनेष्वपि कुटीकुञ्जेषु रङ्गेश्वर ! । अर्च्यः स्सर्वसहिष्णुरर्चकपराधीनाखिलात्मस्थितिः प्रीणीषे हृदयालुभिस्तव ततश्शीलाज्जडीभूयते ॥ ७४ ॥ श्रीमद्व्योम न सीम वाङ्मनसयो-स्सर्वेऽवताराः क्वचित् काले विश्वजनीनमेतदिति धीःश्रीरङ्गधामन्यथ। अर्तस्नागतिकैः कृपाकलुषितैरालोकितैरार्द्रयन् विश्वत्राणविमर्शनस्ख-लितया निद्रासि जागर्यया ॥ ७५ ॥ सर्गाभ्यासनिशालया निज-धिया जानन्ननन्तेशयं भारत्या सहधर्मचाररतया स्वाधीनसङ्कीर्तनः। कल्पानेव वहन् कमण्डलुगलद्गङ्गाऽऽप्लुतोऽपूजयद्ब्रह्मा त्वा मुखलो-चनाञ्जलिपुटैः पद्मैरिवाऽऽर्जितैः ॥ ७६ ॥ मनुकुलमहीपालव्यान-म्रमौलिपरम्परामणिमकरिकारोचिर्नीराजिताङ्घ्रिसरोरुहः । स्वयमथ विभो ! स्वेन श्रीरङ्गधामनि मैथिलीरमणवपुषा स्वार्हण्याराधनान्यसि लम्भितः ॥ ७७ ॥ मन्वन्ववाये द्रुहिणे च धन्ये विभीषणेनैव पुरस्कृतेन । गुणैर्दरिद्राणमिमं जनं त्वं मध्येसरिन्नाथ! सुधाकरोषि ॥ ७८॥ तेजः परं तत्सवितुर्वरेण्यं धाम्ना परेणाग्रणखा-ग्रसुवर्णम् । त्वा पुण्डरीकेक्षणमामनन्ति श्रीरङ्गनाथं तमुपासिषीय ॥ ७९ ॥ आत्माऽस्य जन्तुः परितस्त्वपश्च मित्रस्य चक्षुर्वरुणस्य चाग्नेः । लक्ष्म्या सहोत्पश्चिकगाढबन्धं पश्येम रङ्गे शरदश्शतं त्वाम् ॥ ८० ॥ यस्त्वासि परयुन तमन्तरेमि श्रीरङ्गतुङ्गायतने शयानम् । स्वभावदासेन च योऽहमस्मि स सन् यजे ज्ञानमयैर्मखैस्त्वाम् ॥८१॥ आयुः प्रजानाममृतं सुराणां रङ्गेश्वरं त्वा शरणं प्रपद्ये। मा ब्रह्मणेऽस्मै महसे तदर्थं प्रत्यञ्चमेनं युनजै परस्मै ॥८२॥ आर्ति तितीर्षुरथ रङ्गपते! धनायन् आत्मम्भरिर्जिगिदिषुर्निजदास्यकाम्यन् । ज्ञानीत्यमून् समभधास्त्वममत्युदारान् गीतासु दव ! मदाश्रय गोपकारान् ॥ ८३ ॥ नित्यं काम्यं परमपि कतिचित्त्वय्यध्यात्मस्वमतिभिरममाः । न्यस्तसङ्गा विदधति विहितं श्रीरङ्गेन्दो ! विदधति न च ते ॥ ८४ ॥ प्रत्यक्षं स्वं पञ्चविंश पराचस्स्वक्षणास्तचरादोर्विविच्य । युञ्जा

नाश्नतम्भतयां स्वबुद्धौ स्वं वा त्वां वा रङ्गनाथाऽऽनुवन्ति ॥८५॥ अथ मुदितकषायाः केचिदाचानदासत्वरितशिथिलचित्ताः कीर्तिचिन्त्यानमत्ताः । विदधति ननु पारं भक्तिनिम्ना लभन्ते त्वयि किल वतमे त्वं तेषु रङ्गेन्द्र ! किं तत् ॥८६॥ उपादत्से सत्तास्थितिनियमनाद्यैश्चिदचितौ स्वमुद्दिश्य श्रीमानिति वदति वागौपनिषदी। उपायोपेयत्वे तदिह तव तत्त्वं न तु गुणौ अतस्त्वां श्रीरङ्गेशय! शरणमव्याजमभजम् ॥८७॥ पट्टैनकवराटिकेव कलशा स्थलयोः काकणिकासुवर्णकोट्योः । भवमोक्षणयोस्त्वयैव जन्तुः क्रियते रङ्गनिधे ! त्वमेव पाहि ॥८८॥ ज्ञानक्रियाभजनसम्पदकिञ्चनोऽहमिच्छाधिकारशकनानुशयानभिज्ञः । रङ्गेश्वर! पूर्णवृजिनश्शरणं भवेति मौख्यात् ब्रवीमि मनसा विषयाकुलेन ॥८९॥ त्वयि सति पुरुषार्थे मत्परे चाहमात्मक्षयकरकुदनार्थोऽच्छदद्यद्रङ्गचन्द्र! । जनमखिलमहं युर्वश्च यामि त्वदात्मप्रतिमभवदनन्यशानिवदंशिकस्तन् ॥९०॥ अतिक्रामन्नाज्ञां तव विधिनिषेधेषु भवतेऽपि अभिद्रुह्यन्वाग्धीकृतिभिरपि सक्ताय सततम् । अजानन् जानन् वा भवदसहनीयागसि रतस्सहिष्णुत्वाद्रङ्गप्रवण! तव माभूवमभरः ॥९१॥ प्रकुपितभुजगफणानामिव विषयाणामहं छायाम् । सति तव भुजसुरविटपिप्रच्छाये रङ्गजीवित ! भजामि ॥९२॥ त्वत्सर्वशक्तेरधिकाऽस्मदादेः कीटस्य शक्तिर्यत रङ्गवन्धो! । यत्त्वत्कृपामप्यति कोशकारन्यायादसौ नश्यति जीवनाशम् ॥९३॥ श्रीरङ्गेश! त्वद्गुणानामिवास्मद्दोषाणां कः पारदृश्वा यतोऽहम् । ओघे मोघोदन्यवत् त्वद्गुणानां तृष्णापूरं वर्धतां नाऽस्मि पात्रम् ॥९४॥ त्वं चेन्मनुष्यादिषु जायमानस्तत्कर्मपाकं कृपयोपभुङ्क्षे । श्रीरङ्गशायिन्! कुशलेतराभ्यां भूयोऽभिभूयेमहि कस्य हेतोः ॥९५॥ क्षमा सापराधेऽनुतापिन्युपेया कथं मापराधेऽपि

दृप्ते मयि स्यात् । तथाऽप्यत्र रङ्गाधिनाथाऽनुतापव्यपायं क्षमेताऽतिवेला क्षमा ते ॥९६॥ बलिभुजि शिशुपाले तादृगागस्करे वा गुणलवसहयासाच्चिरक्षमा संकुचन्ती । मयि गुणपरमाणूदन्तचिन्तानभिज्ञे विहरतु वरदाऽसौ सर्वदा सार्वभौमी ॥९७॥ दया परव्यसनहरा मनव्यथा सुखायते मम तदहं दयातिगः । तथाप्यमौ सुखयति दुःखितित्यतः दयस्व मां गुणमयी रङ्गमन्दिरी ॥९८॥ गर्भजन्मजरामृतिक्लेशकर्मपङ्क्तिगः । इदेव देवपद्भ्यां त्वां श्रियोऽहमकामये ॥९९॥ अनुकृत्य पूर्वपुंसः रङ्गनिधे ! विनयदम्भतोऽमुष्मात् । शुन इव मम चरमद्वेः उपभोगस्त्वद्वितीर्णश्वाः ॥१००॥ सकृत्प्रपन्नाय तवाहमस्मीति आयाचते चाभयदीक्षमाणम् । त्वामप्यपाख्याऽहमहम्मतानि रङ्गेश ! विलम्भविकरेकात् ॥१०१॥ तत्रभरोऽहमकारिषि च भिर्कङ्घशरणमित्यपि वाचमुदैरिरम् । इति समाधिकपत्रिदर्य मां कुरु भरं तव रङ्गधुरन्धरी ॥१०२॥ दयाऽन्येषां दुःखाऽप्रमहनमनन्योऽसि सकृत दयालुस्त्वं नाऽतः प्रणनदपराधाननिदुपः । क्षमा ते रङ्गेन्द्रो ! भवति न तरा नाथी न तमां तवौदार्यं यस्मात्त्व श्विभवर्मविस्ममथाः ॥१०३॥ गुणतुङ्गतया तव रङ्गपते! भृशनिम्नमिमं जनमुन्नमय । यदपेक्ष्यमपेक्षितुरस्य हि; तत्परिपूरणमीशितुरीश्वरता ॥१०४॥ त्वं मीनपानीयनयेन कर्मनीमक्तिनिराग्यजुषो निर्मापि । रङ्गेश मां पासि मितम्पचं यत्पानीयशालं मरुभूषु तस्मात् ॥१०५॥

श्रीरङ्गराजस्तवे उत्तरशतकं समाप्तम् ।

श्रीरङ्गराजस्तवश्च समाप्तः ।

## श्रीपराशरभट्टार्यैः रनुगृहीतः श्रीगुणरत्नकोशः ।

श्रीपराशरभट्टार्यः श्रीरङ्गेशपुरोहितः ।
श्रीवत्साङ्कसुतः श्रीमान् श्रेयसे मेऽस्तु भूयसे ॥

श्रियै समस्तचिदचिद्विधानव्यसनं हरेः ।
अङ्गीकारिभिरालोकैः सार्थयन्त्यै कृतोऽञ्जलिः ॥१॥ उल्लास—पल्लवितपालितसप्तलोकीनिर्वाहकोरकितनेमकटाक्षलीलाम् । श्रीरंग-हर्म्यतलमङ्गलदीपरेखां श्रीरङ्गराजमहिषीं श्रियमाश्रयामः ॥२॥ अनुकलतनुकाण्डालिङ्गनारम्भशुम्भत्प्रतिदिशभुजशाखश्रीसखानोक-हर्द्धिः । स्तननयनगुलुच्छस्फारपुष्पद्विरेफा रचयतु मयि लक्ष्मीक-ल्पवल्ली कटाक्षान् ॥३॥ यद्भ्रूभङ्गाः प्रमाणं स्थिरचररचनातार-तम्ये मुरारेः,वेदान्तास्तत्त्वचिन्तां मुरभिदुरसि यत्पादचिह्नैस्तरन्ति। भोगोपोद्घातकेलीचुलकितभगवद्वैश्यरूप्यानुभावा, सा नः श्रीरा-स्तृणीताममृतलहरिधीलङ्घनीयैरपाङ्गैः ॥४॥ यत्वावचव वैभवं तदु चितस्तोत्राय दूरे स्पृहा, स्तोतुं के वयमित्यदश्च जगृहुः प्राञ्चो विरि ञ्चादयः । अप्येवं तव देवि! वाङ्मनसयोर्भोपानमिन्नं पदं फावा-चः प्रयतामहे कथयितुं साम्नि प्रशस्त्यं गिराम् ॥५॥ स्तोतारं तम्नु-शन्ति देवि! कवयो यो विस्तृणीते गुणान्, स्तोतव्यस्य ततश्च ते स्तुतिधुरा मय्येव विश्राम्यति । ; यस्मादसदमर्षणीयफणितिस्तीका-रतस्ते गुणाः, क्षान्त्यौदार्यदयादयो भगवति ! त्वां शस्तुवीरन् प्र-थ,म् ॥६॥ सूक्तिं समग्रयतु नः स्वयमेव लक्ष्मीः श्रीरङ्गराजमहिषी मधुरैः कटाक्षैः । वैदग्ध्यवर्णगुणगुम्फनगौरवैर्यां कण्डूलकर्णकुहराः कवयो धयन्ति ॥७॥ अनाघ्राताघ्रं बहुगुणपरीणाहि मनसः दु-हानं सौहार्दं परिचितमिवाऽथापि गहनम् । पदानां सौभ्रात्रादनि

मिपनिपेव्यं श्रवणयोः त्वमेव श्रीर्मध्यं यद्गुसुखप वाणीविलसितम् ।८।
श्रियःश्रीः! श्रीरङ्गेशयो तव च हृद्यां भगवतीं श्रिय स्त्वत्तोऽप्युच्चैर्प्रति-
निह फणामः शृणुतराम् । दर्शौ ते भूयास्तां सुखतरलतारे श्रव-
णतः, पुनर्हर्षोत्कर्षात्स्फुटतु भुजयोः कञ्चुकशतम् ॥९॥ देवि !
श्रुतिं भगवतीं प्रथमे पुमांसः त्वत्सद्गुणौघमणिकोशगृहं गृणन्ति ।
तद्द्वारपाटनपटूनि च सेतिहाससमन्त्रकणस्मृतिपुराणपुरस्सराणि॥१०॥
आब्रह्मेंदानमानं कतिचन कतिचाऽऽजके विश्वमेतद्राजन्यरङ्केनिरीशं
गुणिनमपि गुणस्तं दरिद्राणमन्ये । मिथ्यान्ये गुराजम्भमिति च
जटास्ते तलातल्यकार्युः ये ते श्रीरङ्गहर्म्याङ्गणकनकलते न क्षणं ल-
क्ष्यमासन् ॥११॥ मनसि विलसताऽक्ष्णा मत्तिगिद्वाञ्जनेन श्रुति-
शिरसि निगूढं त्वन्निधिं ते वीक्षमाणाः । निधिमपि महितानं सुज्ञे
येऽपि धन्याः ननु भगवति दैवी सम्पदं तेऽभिजाता ॥१२॥ अस्ये
शाना जगत इति तेऽधीमहे यां महद्धि श्री ! श्रीसूक्तं चद्गुसुखपते
तां च शाखानुशाखम् । ईष्टे कश्चिज्जगत इति यः पौरुषे सूक्त उक्तः
तं च स्वत्कं पतिमधिजगावुत्तरश्चाऽनुवाकः ॥१३॥ उद्धाहुस्तनामु-
पनेपदसानाह नैका नियन्त्री श्रीमद्रामायणमपि परं प्राणिति त्व य
रित्रे । सतीरोऽस्मज्जननि यतो सेतिहासैः पुराणैः निम्नुर्वेदानपि
च ततसे त्वन्महिम्नि प्रमाणम् ॥१४॥ आब्रुग्रामनिगामकादपि नि-
र्भोगासर्जनिर्वाहकार्दैश्वर्य यदिहोचरोत्तरगुणं श्रीरङ्गभर्तुःप्रिये । तुङ्गं
२ङ्गलमुज्ज्वलं गरिमवत्पुण्यं पुनः पावनं धन्यं यत्तददश्च वीक्षणभु
यस्ते पश्यपा विभुपः ॥१५॥ एको मुक्तातपत्रमचलमणिगणारकारि-
मौलिर्मनुष्यः, द्व्यग्द्वन्द्वावलस्थो न गणयति नवान्यत्क्षणं क्षोणि-
पालान् । यस्तस्मै तिष्ठतेऽन्यः कृपणमशरणो दर्शयन्दन्तपङ्क्ती,

रं श्रीरङ्गराजप्रणयिनि! नयनोदञ्चितन्यञ्चिताभ्याम् ॥१६॥ रति-
र्मतिसरस्वतीधृतिसमृद्धिसिद्धिश्रियः सुधासखि! यतोमुखं चिचलिरस-
र भ्रूलता । ततोमुखमपेन्दिरे! बहुमुखीमहम्पूर्विकां विगाह्य च वरं
पदाः परिवहन्ति कलङ्कपाः ॥ १७ ॥ सहस्थिरपरित्रसद्विरि
ञ्चनाकिञ्चनैः अनोकहबृहस्पतिप्रबलविकल्पप्रक्रियम् । इदं मद
सदात्मना नखिलमेव निम्नोन्नतं कटाक्षतदुपेक्षयोस्तव हि लक्ष्मि!
तत्ताण्डवम् ॥ १८ ॥ कार्ये शंसति योग्यतां चिदचितोरन्योन्यमालि-
ङ्गतोः, भूताहंकृतिबुद्धिपञ्चकरणीस्तान्त्वप्रवृत्तीन्द्रियैः । अण्डाना
ञ्च परस्सहस्रमकरोत्तान्भूर्भुवःस्वर्वतः , श्रीरङ्गेश्वरदेवि! ते विहृतये
सङ्कल्पमानः प्रियः ॥ १९ ॥ शब्दादीन् विषयान् प्रदर्श्य विभवं
विस्मार्य दास्यात्मकम् , वैष्णव्या गुणमायया ऽऽत्मनिवहान् विप्लाव्य
पूर्वः पुमान् । पुंसा पण्यवधूविडम्बिवपुषा धूर्तानिवाऽऽपालयन् , श्री
रङ्गेश्वरि! कल्पते तव परीहासात्मने केलये ॥ २० ॥ यद्दूरे मनसो
यदेव तमसः पारे यदत्यद्भुतं यत्कालादपचेलिमं सुरपुरी यद्गच्छतो
दुर्गतेः । सायुज्यस्य यदेव सूतिरथवा यद्दुर्ग्रहं मद्गिरां तद्विष्णोः
परमं पदं तव कृते मातस्समाम्नासिषुः ॥२१॥ हेलायामखिलं चरा
चरमिदं भोगे विभूतिः परा पुण्यास्ते परिचारकर्मणि सदा पश्यन्ति
ये सूरयः । श्रीरङ्गेश्वरदेवि! केवलकृपानिर्वाह्यवर्गे वयम् , शेषित्वे
परमः पुमान्परिकरा ह्येते तव स्फारणे ॥२२॥ आज्ञानुग्रहभीमको
मलपुरीपाला फलं भेजुषां याऽयोध्येत्यपराजितेति विदिता नाकं परेण
स्थिता । भावैरद्भुतभोगभूमगहनैस्सान्द्रा सुधास्यन्दिभिः श्रीरङ्गे
श्वरगेहलक्ष्मि! युवयोस्तां राजधानीं विदुः ॥२३॥ तस्यां च दर-
त्कृपावन्निरवधिजनताविश्रमार्हावकाशं सङ्कीर्णं दासवृन्दाकलितपरि
कर्मैःपुम्भिरानन्दनिघ्नैः । स्नेहादस्थानरक्षाव्यसनिभिरभयं शार्ङ्गच-

फामिमु ध्यैः आनन्दं कार्णनं श्रीभगवति! युवयोराहुराश्थानरत्नम्॥२४
तत्र स्मस्पर्शगन्ध स्फुरदुपरिफणारत्नरोचिर्वितान, सिनी सोऽनन्त-
भोगं तदुपरि नयता स्थिमेकातपत्रम् । तैस्तैः कान्तेन शान्तोदि-
तगुणनिभरैरर्हता त्वामसंरुयैः, अन्योन्याह्रितनिष्ठापनरसगहनान्
देवि! बध्नासि भोगान् ॥२५॥ भोग्या वामपि नान्तरीयकतया पुष्पा-
ङ्गरागैस्समं निवृत्तप्रणय, तिमाहनविधौ नीताः परीनाहताम् । देवि!
त्वामनु नीलया सह मही देव्यसहस्रं तथा याभिस्त्वं स्तनबा,-
ह्यिभिरिव स्वाभिःप्रियं श्लाघसे ॥२६॥ ते साध्यास्सन्ति देवा ज-
ननि! गुणवपुर्वेषवृत्तस्वरूपैः भोगैर्वा निर्विशेषास्समवयस इव ये नित्य
निर्दोषगन्धाः । हेश्रो! श्रीरङ्गभर्तुस्तव च पदवरीचारवृत्त्यै सदाऽपि
प्रेमप्रद्राणभावाविलहृदयहठात्कारकैङ्कर्यभोगाः॥२७॥ स्वरूपं स्वात-
न्त्र्यं भगवत इदं चन्द्रवदने! त्वदाश्लषोत्कर्षाद्भवति खलु निष्कर्ष-
समये । त्वमासीमातः श्रीः कमितुरिदमित्थन्त्वनिमवस्तदन्तर्भा-
वात्सां न पृथगभिधत्ते श्रुतिरपि ॥२८॥ तव स्वर्शादीशं स्पृशति क-
मले! मङ्गलपद तदिदं नोपाधेरुपनिपतित श्रीरसि यत । प्रसूनं पु-
ष्यन्तीमपि परिमलर्द्धि जिगदिपुः न चैवन्त्वादेवं स्वदत इति कश्चि-
त्कनयते ॥२९॥ अपाङ्गा भयासो यदुपरि परं ब्रह्म तदभूदमी यत्र
द्वित्रास्स च शतमखादिस्तदधगत् । अतः श्रीराम्नायस्तदुभयमु
खीत्वां प्रणिजगौ प्रशस्तिस्सा राज्ञो यदपिच पुरीकोशधनम्॥३०॥
स्वतः श्रीस्त्वं विष्णोः स्वमसि तत एवैष भगवान् त्वदायत्तर्द्धित्वेऽप्य-
भवदपराधीनविभवः । स्वया दीप्त्या रत्नं भवदपि महार्घं न विगुणं
नकुण्ठस्वातन्त्र्यं भवति च न चान्याहितगुणम् ॥३१॥ प्रशकुनत
लज्योतिर्ज्ञानैश्वरीविजयप्रथा प्रणतवरणप्रेमक्षेमङ्करत्वपुरस्सराः । अपि
परिमलः कान्तिर्लावण्यमर्चिरितीन्दिरे! तव भगवतश्चैते साधारणा

गुणराशनः ॥२२॥ अन्येऽपि यौवनमुखा युवयोस्तमानाः श्रीरङ्ग-
मङ्गलविजृम्भणवैजयन्ति । वसिस्तव त्वयि च तस्य परस्परेण सं
स्पर्धं दर्पण इव प्रचुर स्वदन्ते ॥२३॥ युवत्वादौ तुल्येऽप्यपरवश-
ताशत्रुशमनस्थिरत्वादीन्कृत्वा भगवति गुणान्पुंस्त्वसुलभान् । त्वयि स्त्रीत्वैकान्तान् प्रदिमपतिपारार्थ्यकरुणाक्षमादीन्वा
भोक्तु भवति युवयोरात्मनि भिदा ॥२४॥ घनकनकद्युती युवदशा-
मपि मुग्धदशां युवतरुणत्वयोरुचितमाभरणादि परम् । भुवनसमान-
देशविनिवेशि विभज्य हरौ त्वयि च कुशेशयोदरविहारिणि निर्वि
शास ॥२५॥ अङ्गं ते मृदुशीतमुग्धमधुरोदारैर्गुणैर्गुम्फितः, क्षीरा
ब्धेः किमजीपता शुपगता मन्ये महार्घं रतनः । इन्दुः कल्पलतासु
धामधुमुखा इत्यादिला वर्णना, श्रीरङ्गेश्वरि ! शान्तका मकुर्यं
दिव्य यतुर्नार्हति ॥२६॥ प्रणमदनुविधित्सावामनानामग्रे प्रणयिप-
रिचिर्चपादुश्चितं पार्श्वकेन । कनकनिकषचञ्चच्चम्पकस्रक्समानप्र-
वरमिदमुदारं वर्ष्म वाचामभूमि ॥२७॥ एकं न्यञ्चय नतिक्षमं मम
परं चाकुञ्चय पादाम्बुजं मध्येविष्टरपुण्डरीकमभयं विन्यस्य हस्ता
म्बुजम् । त्वां पश्येम निषेदुषीं प्रतिकलं कारुण्यकूलङ्कषस्फारापाङ्ग
तरङ्गमम्ब ! मधुर मुग्धं मुख बिभ्रतीम् ॥२८॥ सुरभितनिगमान्त
वन्दिषीयेन्दिरायाः, तव कमलपलाशप्रक्रियं पादयुग्मम् । वहति
यदुपगन्दवजयन्ती शिरसाम्भ स्तुतिभिरिव नवत्वं कान्तवाहान्त-
राले ॥२९॥ स्वस्वीकारकलावलेपकलुषा राज्ञा दृशो दुर्वेना नित्यं
त्वन्मधुपानमत्तमधुपश्रीनिर्भराम्या पतिम् । दृग्भ्यामेव हि पुण्डरीक
नयन वेदो विदामास ते साक्षात्लक्ष्मि' तराङ्कालोकाभिरः काका
कृपा वर्ण्यते ॥३०॥ आनन्दात्मभिरीशमज्जनमदक्षीवालसैरगल
प्रेमार्द्रैरपिकूलमुद्रङ्कयामम्लानितास्वादशै । पद्मे ! ते प्रतिदिन-

चन्द्रकलिकब्रह्मादिविष्कम्भकैः, ऐश्वर्याद्भगवद्वदेश्शरणे मां पालया- ऽऽलोकितैः॥४१॥ पादारुन्तुदमेव पङ्कजरजश्चेटीभृशालोकितैः अ- म्लानिरथाम्बा मातृमविधां लीलारविन्दग्रहः। डोला ते नम्मा- लैया हरिभुजे हास्यशब्दास्पदं केन श्रीरतिकोमला तनुरियं वाचां विमर्दक्षमा ॥४२॥ आमर्यादमकण्टकं स्तनयं नाद्यापि नाऽऽलो कितभ्रूभेदस्मितविभ्रमा वहति वा नैसर्गिकस्ताऽऽशः। इत्थं शैश- वयौवनव्यतिकरो गात्रेषु ते सौरभं भोगस्रोतसि कान्तमेशिककरग्रहेण गाहक्षमः ॥४३॥ आमोदाद्भुतजालि यौवनदशाल्याकोचमम्लानिग- न्धौन्दर्यामृतसेकशीत्यमिद लावण्यपूर्णार्थितम्। श्रीरङ्गेश्वरि को मलाङ्गसुमनस्यन्दमणं देवि ते कान्तोरःप्रतियत्नमर्हति कविं धि- ङ्नामकाण्डाकुलम् ॥४४॥ मर्मरज्ञो रमसिरा व्यतिविध्ययुतः कान्तोपभोगललितैर्ललिताङ्गयष्टिः। पुष्पावलीव रसिकभ्रमरोपभुक्ता त्व दवि नित्यमभिनन्दयते मुकुन्दम् ॥४५॥ वनकरशनामुक्ता- हारहारलताटिका म णिनरतुलाकोटिग्रावैर्जनार्दनजीवित्का। प्रकृ तिमधुर गात्रे जागर्ति मुग्धविभूषणैर्वलयश्रकलैर्दुग्धं पुर्यश्च कनक लता यथा ॥४६॥ स मान्यभोग्यमपि कौस्तुभमेत्ययन्ती पञ्चायु धादि रमणः स्वयमेर विभ्रत्। तद्वास्वेदमिव ते परिकर्तुकामः श्रीरङ्गधाममणिमञ्जरि! गाहते त्वाम् ॥४७॥ यदि मनुजतिरश्चां लीलया तुल्यवृत्तेः अनुजनुरनुरूपा देवि नावातरिष्यः। अमर- समभविष्यत्कर्म नाथस्य मातः! दग्दलदरविन्दोदन्तकान्तायताक्षि४८ स्खलितकटकमाल्यैर्दोर्भिरब्धिं मुरारेः भगवति! दधिमाथं मथ्नतः श्रान्तिशान्त्यै। अमृततरङ्गावर्ततः प्रादुरासीः स्मितनयनसुधा- भिस्सिञ्चती चन्द्रिकेव ॥४९॥ मातर्मैथिलि! राक्षसीस्त्वयि तदैवार्द्रा- पराधास्त्वया रक्षन्त्या पवनात्मजाल्लघुतरा रामस्य गोष्ठी कृता।

काकं तं च विभीषणं शरणमित्युक्तिक्षमौ रक्षतः सा नस्सान्द्र महागमस्सुखयतु क्षान्तिस्तवाऽऽकस्मिकी ॥ ५० ॥ मातर्लक्ष्मि! यथैव मैथिलजनस्तेनाऽध्वना ते वयं त्वद्दास्यैकरसाभिमानसुभगैर्भावैरिहाऽमुत्र च। जामाता दयितस्तवेति भवतीसम्बन्धदृष्ट्या हरिं पश्येम प्रतियाम याम च परीचारान् प्रहृष्येम च ॥ ५१ ॥ पितेव त्वत्प्रेयाञ्जननि! परिपूर्णागसि जने हितस्रोतोवृत्त्या भवति च कदाचित् कलुषधीः। किमेतन्निर्दोषः क इह जगतीति त्वमुचितै-, रुपायैर्विस्मार्य स्वजनयसि माता तदसि नः ॥ ५२ ॥ नेतुर्नित्य सहायिनी जननि! नस्त्रातुं त्वमत्राऽऽगता, लोके त्वन्महिमावबोध बधिरे प्राप्ता विमर्दं बहुं। क्लिष्टं ग्रावसु मालतीमृदु पदं विश्लिष्य वासो वने, जातो धिक् करुणां धिगस्तु युवयोः स्वातन्त्र्यमत्यङ्कुशम् ॥ ५३ ॥ अधिशयितवानब्धिं नाथो ममन्थ ववन्ध तं, हर धनुरसौ वल्लीभङ्गं वभञ्ज च मैथिलि। अपि दशमुखीं लूत्वा रक्षः कबन्धमनर्तयत्, किमिव न पतिः कर्ता त्वद्बाहुचुम्बु मनोरथः ॥ ५४ ॥ दशशतपाणिपादवदनाक्षिमुखैरखिलैः, उपि निज वैभवरूप्यविभवैरनुरूपगुणैः। अनतपोरतैश्च रसयन् कमिता कमले! क्वचन हि विभ्रमभ्रमिमुखे विनिमज्जति ते ॥ ५५ ॥ जननभवन प्रीत्या दुग्धार्णवं बहुमन्यसे, जननि! दयितप्रेम्णा पुष्णासि तत् परमं पदम्। उदधिपरमव्योम्नोर्विस्मृत्यमादृशरक्षणक्षममिति धिया भूयः श्रीरङ्गधामनि मोदसे ॥ ५६ ॥ औदार्यकारुणिकताश्रितवत्सलत्वपूर्वेषु सर्वमतिशायितमत्र मातः! । श्रीरङ्गधाम्नि यदुताऽन्यदुदाहरन्ति, सीतावतारमुखमेतदमुष्य योग्या ॥ ५७ ॥ ऐश्वर्यमक्षरगतिं परमं पदं वा, कस्मैचिदञ्जलिभरं वहते वितीर्य। अस्मै न किञ्चिदुचितं कृतमित्यथाम्ब!, त्वं लज्जसे कथय कोऽयमुदारभावः ॥ ५८ ॥ ज्ञानक्रियाभजनसम्पद

किञ्चनोऽहं इच्छाधिकारशकनानुशयानभिज्ञः । आगांसि देवि! युवयोरपि दुःसहानि, बध्नामि मूर्खचरितस्तव दुर्भरोऽस्मि ॥५९॥ इत्युक्तिकैतवशतेन विडम्बयामि, त्वामम्ब! सत्यवचसः पुरुषान् पुराणान् । यद्वा न मे स्वबलं तव पादपद्मलाभे त्वमेव शरणं विधिना कृताऽसि ॥ ६० ॥ श्रीरङ्गे शरदश्शतं सह सुहृद्वर्गेण निष्कण्टकं, निर्दुःखं सुसुखं च दास्यरसिकां भुक्त्वा समृद्धिं पराम् । युष्मत्पादसरोरुहान्तररजः स्याम त्वमम्बा पिता, सर्वं धर्ममपि त्वमेव भवनः स्वीकुर्वरुस्मात्कृपाम् ॥ ६१ ॥

॥ श्रीगुणरत्नकोशः समाप्तः ॥

---

## श्रीकूरनारायणमुनिभिरनुगृहीतं
## श्रीसुदर्शनशतकम् ।

श्लेशविंशतिकरामयस्य चकार चक्रस्तुतिं निवृत्तये ।
समाश्रयेऽहं परकूरणीं यः तं कूरनारायणनामकं मुनिम् ॥

### ज्वालावर्णनं प्रथमम्—

सौदर्शन्युज्जिहाना दिशि विदिशि तिरस्कृत्य सावित्रमर्चिः बाह्या बाह्यान्धकारक्षतजगदगदङ्कारभूम्ना स्वधाम्ना । दोःखर्जूदूरगर्जद्विबुधरिपुवधूकण्ठवैकल्यकल्या ज्वाला जाज्वल्यमाना वितरतु भवतां वीप्सयाऽभीप्सितानि ॥१॥ प्रत्युद्यातं मयूखैर्नभसि दिनकृतः प्रासमेवं प्रभाभिः, धूमो सौमेरवीभिर्दिवि चरितमिवं दीप्तिभिर्देवधाम्नाम् । भूपृष्ठे भवते च स्फुटतु मरुदिग्भ्रान्तमन्द्रस्फुलिङ्गं, चाक्रं जाग्रन्मजार त्रिभुवनविजयव्यग्रमुग्रं महस्त्व ॥ २ ॥ पूर्णं पूर्वस्तु-भानां सुमहति लसतस्सोमबिम्बालवाले, बाहाशाखावरुद्धक्षितिग-

शनदिवथक्रराजद्रुमस्य । ज्योतिश्छत्रा प्रवालः प्रकटितसुमनस्स-
म्पदुत्तमलक्ष्मीं, पुण्यावाशासुखेषु प्रदिशतु भवतां सप्रकारं प्रहर्षम्
॥३॥ अरादारात् सहस्राद्विसरति विमलश्रेयद्वादयक्ष्मात्, नामे-
र्भास्वत्सनाभेर्निजविभवपरिच्छिन्नभूमेश्च नेमेः । आम्नायैरेकं-
कण्ठैः स्तुतमहिममहो माधवीयस्य हेतेः, तद्दो दिक्ष्वेधमानं चत-
सृषु चतुरः पुष्यतात् पूरुषार्थान् ॥ ४ ॥ श्यामं धामप्रसुत्या क-
चन भगवतः क्वापि चक्र प्रकृत्या, शुभ्रं शेषस्य भासा क्वचन मणि-
रुचा क्वापि तस्यैव रक्तम् । नीलं श्रीनेत्रकान्त्या क्वचिदपि मिथुनं
स्याऽऽदिमस्येव चित्रं, व्यातन्वानं वितानश्रियमुपचिनुताच्छर्म
चक्रभानम् ॥ ५ ॥ शंसन्त्युन्मेषमुच्छोपितपरमहसो भास्वतः
कैटभारेः इन्धे सन्ध्येव नक्तञ्चरविलयकरी या जगद्वन्दनीया ।
चन्धूकच्छायमन्युच्छविघटितघनच्छेदमेजस्विनी सा, राथाङ्गी
रश्मिभंगी प्रणुदतु भवतां प्रत्यहोत्थानमेनः ॥ ६ ॥ साम्यं धूम्या
प्रवृद्धया प्रकटयति नभस्तारकाजालकानि, स्फौलिङ्गीं यान्ति
कान्तिं दिशति यदुदये मेरुरङ्गारशङ्काम् । अग्निर्मर्यार्चिरैक्यं भजति
दिननिशावल्लभो दुर्लभाभो, ज्वालावर्तोऽपि स्तः प्रहरणपतिजं
धाम यस्तद्विनोतु ॥ ७ ॥ दृष्टेऽप्यव्योम चक्रे विकचनवजपासन्नि-
काशे सकाशं, सर्भानुर्भानुरेष स्फुटमिति कलयन्नागतो वेगतो
ऽस्य । निष्टतो यन्निवृत्तो विधुमिव सहसा स्वदुमप्यापि नेष्टे, घर्मांशु
ते घटन्तामहितविहतये भानवो भास्वरा वः ॥ ८ ॥ देवं हेमाद्रितुंगं
पृथुभुजशिखरं बिभ्रतीं मध्यदेशे, नाभिद्वीपाभिरामामरविपिन-
वर्तीं शेषशीर्षासनस्थाम् । नेमिं पर्यायभूमिं दिनकरकिरणादृष्टसीमः
परीत्य, प्रीत्यै चक्रवालाचल इव विलसत्वस्तु दिव्यास्त्ररश्मिः
॥९॥ एकं लोकस्य चतुर्द्विविधमनुदरकर्म नम्रत्रिनेत्रं, दात्रर्थानां
चतुर्णां शमवदरिणं पञ्चतां षड्गुणाढ्यम् । सप्तार्चिश्शोचिता
ष्टापदनवकिरणश्रेणिरञ्जद्दशाशं पर्यस्यद्दश्शताङ्गावयवपरि-

भृढज्योतिरीतीस्सहमम् ॥ १० ॥ उच्चण्डे यच्छिखण्डे निविडयति नभःक्रोडमक्रोऽटति धाम्, अभ्यस्य प्रौढतापग्लपितवपुरपो भिभ्रतीरभ्रपंक्तीः। धत्ते शुष्यत्सुधौतसो निधुरपमधुन क्षौद्र कोशस्य साम्यं, रक्षन्त्वस्त्रप्रमोस्ते रचितसुचरितव्युष्टयो घृष्टयो वः ॥ ११ ॥ पर्वांघोदीर्घिकाम्भस्सनिधरतटे गैरिकाम्बु प्रपात, सिन्दूरं कुञ्जराणां दिशिदिशि गगने सान्ध्यमेघप्रबन्ध। पारावारे प्रवालो घनभुवि च तथा प्रेक्ष्यमाणः प्रमुग्धं, साधिष्ठ वः प्रमोदं जनयतु दनुजद्वेषिणस्स्वंपरादिः ॥ १२ ॥ भानो भा नो त्वदीया स्फुरति कुमुदिनीमित्र! ते कुत्र तेजः, ताग! स्ताऽऽरादयी रोसनल! न भवतः स्वैरमस्मद्दाचिः। शंमन्तीरथं नभःस्था यदुदयसमये चक्रराजांशवस्ते, युष्माकं प्रौढतापप्रसरभवगद्वापक्रमाय क्रमन्ताम् ॥ १३ ॥ जग्ध्वा कर्णेषु दूर्वाङ्कुरमरिसुदृगामक्षिपु स्वर्णधूनां, पीत्वा चाऽम्भश्चरन्त्यः सत्रपमनुगता वल्लवेनाऽऽदिमेन। गावो यद्यक्रमर्त्ुः परममृतरम प्रश्रितानां दुहानाः, क्ष्वेद्धिक्ष्वालोनत्लुप्तनिश्रुरनतमसः मातुरन्धां वहन्ताम् ॥ १४ ॥ सेनां सेनां मघोनो महति रणमुखेऽलं भयांलम्भयन्तीः उत्सेकोष्णालुदोष्णा प्रथमदिविषद्धामान्लीयांऽालीढे। विश्व विश्वम्भराघे रथपदधिपते लीलया पालयन्ती,शृद्धिस्सा दीधितीनां वृजिनमनुजनुर्माऽजेयताऽजितं वः॥१५॥ तप्ता स्वेनोष्मणेव प्रतिभटवपुषामस्रधारा धयन्ती, प्रासेन क्षीबमावं प्रतिदिशमकृत् तन्वती घूर्णितानि। विंशाखिस्फोटशब्दं प्रकटयति पटून् याऽऽहन्त्यट्टहासान्, भामा वः सन्दनाङ्गप्रभुमुदयिनी स्पन्दता चिन्तताय ॥ १६ ॥ ढेनेगसेव्यमानो दनुजभटभुजादण्डदर्पोष्मतंसः, आशारोधोतिलङ्घी लुठदुडुपटलीलक्ष्यडिण्डीरपिण्डः। रिङ्गज्जालातरङ्गस्थितिरिपुनरुत्पातपातोग्रमार्गः, चाकोरश्शोचिरोधस्समयतु दुरितापद्वरं दायनाद्रिम् ॥ १७ ॥

भ्राम्यन्ती संश्रितानां भ्रमशमनकरीच्छन्नसूर्यप्रकाशा, सर्वलोका-
नुरूपा रिपुहृदयतमस्कारिणी निस्तमस्का । धारासंपातिनी च
प्रकटितदहना दीप्तिरस्त्रेशितुर्वः, चित्रा भद्राय विद्रावितविम
तजना जायतामायताय ॥ १८ ॥ निन्ये वन्येव काशी दवशि-
खिजटिलज्योतिषा येन दाहं, कृत्यावृत्त्या विलिल्ये शलभसुल
भया यत्र चित्रप्रभावे। रुद्रोऽप्यद्रेर्दुहित्रा सह गहनगुहां यद्भयादभ्य
यासीत्, दिश्याद्दिश्यार्चितो वस्स शुभमनिभृतं शौरिहेतिप्रतापः
॥ १९ ॥ उद्यन् बिम्बादुदाराम्भयनजलहिमं मार्जयन् निर्जरीणां,
अज्ञानध्वान्तमूर्धाकरजनिरजनीमज्जनव्याञ्जिताध्वा, । न्यक्कुर्वाणो
ग्रहाणां स्फुरणमपहरन्नर्चिषः पावकीयाः, चक्रेशार्कप्रकाशो दिशतु
दश दिशो व्यश्नुवानं यशो वः ॥ २० ॥ वर्गस्य स्वर्गधाम्नामपि
दनुजनुषां विग्रहं निग्रहीतुं, दातुं सयोयलानां श्रियमतिशयिनीं
पत्रभङ्गानुवृत्त्या । योऽङ्के देदीप्यते या युगपदपि पुरो भूतिमध्या
प्रकृत्या, सा वो नुधादविद्यां द्युतिरमृतरसस्यन्दिनीस्यान्दनाङ्गी २१
दाहं दाहं सपत्नान् समरभुवि लसद्भस्मना वर्त्मना यान्, क्रव्यादप्रे
तभूतायभिलषितपुषा प्रीतकापालिकेन । कङ्कालैः कालधौतं
गिरिमिव कुरुते यः स्वकीर्तेर्विहर्तुं, घृष्टिस्सान्द्रप्रियं वस्स कलमुपनयत्वाशु
धाम्रेसरस्य २२ दग्धानां दानवानां सभसितनिचयैरस्थिभिस्सर्वशुभ्रां,
पृथ्वीं कृत्वापि भूयो नवरुधिरझरी कौतुकङ्क्षणपेभ्यः। कुर्वाणं वाष्पपूरैः
कुचतटघुसृणक्षालनैस्तद्वधूनां, पापं पापच्यमानं शमयतु भवतां
शस्त्रराजस्य तेज ॥ २३ ॥ मायाम्भोधं ललाटानल इति मदनद्वेषिणा
ध्यायतेव, सृष्टां प्रोद्यद्दिवासाम्बुजदलपटलप्लोषपुञ्जप्यतेव ।
वज्राग्निर्मांस नाश व्रजदिति चकितेनेव शक्रेण वन्द्यैः स्तोत्रैरस्त्रेश्वरस्य
रस्य द्यतु दुरितं शतं द्योतमाना द्युतिर्वः॥२६॥इति ज्वालवर्णनं प्रथमम्

अथ नेमिवर्णनं द्वितीयम्—

सव्यासे गात्रयन्ती शलभकुलमिव ज्वालया लेलिहाना, घोषैः स्वैः क्षोभयन्ती विघटितभगवद्योगनिद्रान् समुद्रान्। व्योदोरः प्रौढचार स्फुटितरदुरदत्कीकसक्षुण्णदैत्यं, नेमिस्पर्दर्शनी वः श्रियमतिशयिनीं दासतादाशतान्तर् २५ धारा चक्रस्य तत्त्वगगनकणविततिद्योतितद्युप्रचारा पारावारान्तुरकथनपितुनितौचालपातालयात्रा। गोत्राद्रिस्फोटशब्दप्रकटितनसुधामण्डली चण्डयाना, पन्थानं वः प्रदिश्यात् प्रजननकुशला पाप्मनामात्मनीनम् ॥ २६ ॥ यात्रा या शातलोका प्रकटितरुपत्राससुद्रे समुद्रे, सव्यामन्त्रा सहोल्मा कृतमगकदगस्पन्ददाना ददाना। हानिं हा निन्दितानां जगति परिपिशं दानवीनां नवीनां, चक्रे चक्रेशनेमिश्शमुपहरतु सा सप्रभावप्रभावः॥ २७ ॥ पत्राण्यमित्रान् दिधक्षौ प्रविशति वलिनो धाम निस्सीमधाम्नि, प्रस्तावस्ताप्शीर्गैः प्रगुणितसिकतो मौक्तिकैश्शार्केकैः। रात्रिनीरामपारां प्रकटयति पुनरंरिदाराश्रुपूरैः,वृद्धिं निर्याति निर्यापयतु नवुरितान्यस्त्रराजप्रधिर्वः ॥ २८ ॥ कञ्चातालेन कतवनयकगमणीन् कल्पदीपस्य मुञ्चन् पातालान्त प्रपतो निखिलमपि तमः स्वेन धाम्ना निगीर्य। दैतेयप्रेयसीनां वसति हृदि हतप्रेयसां भूयसां यः, चक्राग्रीयाग्रदेशो दहतु विलसितं बहुमासंहमां वः २९ कृष्णाम्भोदस्य भूयो कृतनयननयन्त्या हतिभिर्मरस्य, प्राप्सामावेदयन्ती प्रतिभटलुदयामुदूढां बाप्पवृष्टिम्। निष्प्रत्यापदश्रोत्नभमरचप्राजितरुजिह्वाना, कीर्तिं शकेतकीभिः प्रथयतु सदृशीं चञ्चला चक्रधारा ॥ ३० ॥ वप्रायां भेदनीयःपरिणतिमखिलश्लाघनीयां दधान, क्षुण्णा नक्षत्रमालां दिशि दिशि विकिरन् विद्युता तुल्यकल्पः। निर्याणेनोल्कटेन प्रकटयति नवं दानवारिप्रकर्षं, चक्राधीशस्य मद्रो वयतु भरतां सर्वधाविश्रुतिम् ॥ ३१ ॥ नाकौकल्लगुजगुट्टनविघटितस्कन्धनीरन्धनिर्यत्, नव्यक्रव्याशमव्यग्रनतस्खलमज्जालजिह्वालराज्ञिम्।

द्धनसहमणिस्तम्भसम्पत्सखानि, त्रायन्तामन्तिमायां विपदि सपदि चोऽराणि सौदर्शनानि ॥ ३९ ॥ ज्वालाजालप्रवालस्तवकितशिरसो नाभिमालालयन्त्य', सिक्ता रक्ताम्बुपूरैश्चकलितवपुषां शात्रवाणीकिनीनाम् ॥ चक्राक्रीडप्ररूढा भुजगशयभुजोपघ्ननिघ्नप्रचाराः, पुष्पन्त्यः कीर्तिपुष्पाण्यरकनकलताः श्रीतये वःप्रथन्ताम् ॥ ४० ॥ ज्वालाजालाश्चिमुद्रं क्षितिजलयमिवाऽऽयिभ्रती नेमिचक्रं, नागेन्द्रस्येव नाभेः फणपरिषदिव श्रेष्ठरत्नप्रकाशा । दत्तां वो दिव्यहेतेर्मतिमरविततिः स्यात्तसाहस्रमङ्ख्या, सङ्ख्यावत्सङ्घ चित्तश्रवणहरगुणस्निग्धसन्दर्भगर्भाम् ॥ ४१ ॥ अक्लेशोपक्रमाणां वहुविधविमतध्येदसंमोदितानाम्, सेवायै देवतानां दनुजकुलरिपो पिण्डिकाद्यङ्गभाजाम् । तत्तद्धामान्तसीमाविभजनविधये मानदण्डायमाना, भूमानं भूयसा वो दिशतु दशशती भास्वराणामराणाम् ॥ ४२ ॥ ज्वालाकल्लोलमालानिविडपरिसरां नेमिवेलां दधाने पूर्णेनाक्रान्तमध्ये भुवनमयहविर्भोजिना पूरुषेण । प्रस्फूर्जत्प्राज्यरत्ने रथपदजलधावेधमानैः स्फुलिङ्गैः भद्रं वो विद्रुमाणां श्रियमरवितनिर्विस्तृणाना विधत्ताम् ॥ ४३ ॥ नासीरस्वैरभग्नप्रतिभटरुधिरासारधारावसेकान् एकान्तस्मेरपद्मप्रकरसहचरच्छायया प्राप्य नाभ्या । मुक्तानीवाङ्कुराणि स्फुरदनलशिखादर्शितप्राक्प्रवालानि, अव्याघातेन भव्यं प्रददतु भवतां दिव्यहेतेरराणि ॥ ४४ ॥ दावोल्कामण्डलीव द्रुमगणगहने वाडवस्येव वह्नेः, ज्वालावृद्धिर्महाब्धौ प्रचयति तमसि प्रातरर्कप्रभेव । चक्रे या दानवानां हयकरटिघटासङ्कटे जाघटीति प्राज्यं सा वः प्रदेयात् पदमरपरिषत् पद्मनाभायुधस्य ॥४५॥

तापाद्दैत्यप्रतापातपमनुपचितात् त्रायमाणं त्रिलोकीम्, लोलज्ज्वाला कलापैः प्रकटयदभितश्चानदृष्टाम्बरान्ते । छत्राकारं शलाका इव कनककृताश्चारिदोर्दण्डलग्नं, भूयासुर्भूपयन्त्यो रथचरणभर-स्फूर्तयः कीर्तये वः ॥ ४६ ॥ नाभीशालानिखातां नहनसमुचितां वैरिलक्ष्मीवशानां, संयद्वारीहतानां समनुविदधती काञ्चनालान पङ्क्तिम् । राज्या च प्राज्यदैत्यव्रजविजयमहोत्तम्भितानां भुजानां, तुल्या चक्रारमाला तुलयतु भवतां तूलचण्डतुलोकम् ॥ ४७ ॥ आ नेमेश्चक्रवालाश्चितय इव चितताः पिण्डिकाचण्डदीप्तेः, दीप्ता दीपा इवाऽऽराङ्कनरघातमीगाहिनः पूरुषस्य । शाणे रेखायितानां रथ-चरणमये शतुशौण्डीर्यहेम्नां, रेखाः प्रत्यग्रलग्ना इव भुवनभरश्रे-णयः प्रीणयन्तु ॥ ४८ ॥ दीप्तैरर्चिःप्ररोहैर्दलवति विधृते बाहु नालेन विष्णोः, उद्यत्प्रद्योतनाभं प्रथयति पुरुषं कर्णिकाचर्णि-कायाम् । चूडालं वेदमौलिं कलयति कमले चक्रनाम्नोपलक्ष्ये, लक्ष्मीं स्फारामराणि प्रतिविदधतु वः केसरश्रीकराणि ॥ ४९ ॥ धातुस्यन्दैरमन्दैः कलुषितवपुषो निर्झराम्भःप्रपातान्, अचिन्मत्या स्वमूर्त्या रथचरणगिरेर्नेमिनाम्नीतटस्य । व्याकुर्वाणाऽरपङ्क्तिर्वि-तरतु विभुतावितर्तिं विचकोटी, कोटीरच्छत्रपीठीकटककरिघटा-चामरसङ्गिणीं वः ॥ ५० ॥ इति अरवर्णनं तृतीयम् ।

अथ नाभिवर्णनं चतुर्थम्—

ऐक्येन द्वादशानामशिशिरमहसां दर्शयन्ती मयूखं, दक्षः स्वर्लोकलक्ष्म्यास्तिलक इव मुखे पद्मरागद्रवेण । देयाद्दैतेयदर्पक्षति करणरणप्रीणितानम्भोजनाभिः नाभिर्नाभित्वमुच्चात्सुरपतिविभव स्पर्धि सौन्दर्यशालिनी नः ॥५१॥ शत्रुश्यामे शताङ्गक्षितिभृति तरलत्वक्-रङ्गे तुरङ्गैः स्वङ्गन्मानङ्गनेऽङ्गे कुपितभटमुगच्छागलुब्धप्रवाले । अस्तोकं प्रस्तुवाना प्रतिभटजलधौ पार्वणं घाडवस्य, श्रेयो वस्संवि-

धत्तां श्रितदुरितहरा श्रीभगस्तस्य नाभिः ॥ ५२ ॥ ज्वालाचूडाल कालानलचलनसमाडंबरा सांपरायं, यासावासाद मायत्सुरसुभट भुजास्फोटकोलाहलाढ्यम् । दैत्यारण्यं दहन्ती विरचयति यशोभूतिशुभ्रां धरित्रीं, सा वश्चक्रस्य नक्रस्यदमृदितगजत्रायिणी नाभिरव्यात् ॥ ५३ ॥ विन्दन्ती सान्ध्यमर्चिर्विदलितवपुषः प्रत्यनीकस्य रक्तैः, स्फायन्नक्षत्रराशिर्दिशिदिशि कणश कीकसै कीर्यमाणैः । नाकौकःपद्मलाक्षीनवमदहसितच्छायया चन्द्रपादान्, राधाङ्गी विस्तृणाना रचयतु कुशलं पिण्डिका यामिनी वः ॥ ५४ ॥ निस्सीमं निस्सृताया भुजधरणिधराघाटतः कैटभारेः, आशाकूलङ्कषैरहितबलमहाम्भोधिमासादयन्त्याः । चक्रज्वालापगायाश्चलदलहरीमालिकादन्तुराया, विभ्रत्यावर्तभावं भ्रमयतु भुवने पिण्डिका वः प्रशस्तिम् ॥ ५५ ॥ पाणौ कृत्वाहवाग्रे प्रतिभटनिजयोपार्जितां वीरलक्ष्मीं, अनीतायास्ततोऽस्याः स्वसविधमसुरद्वेषिणा पूरुषेण । प्रासादं वासहेतोर्विरचितमरुणं रश्मिभिस्सूचयन्ती, नाभिर्नो निर्मिमीतां रथचरणपतेर्नि॰॰ निर्निघाताम् ॥ ५६ ॥ डिण्डीरापाण्डुगण्डरिपुयुवतिमुखैः पिण्डिका कृष्णहेतेः, उद्दण्डाशुप्रपंचरुपरतिलकैरुक्तशौण्डीर्यचर्या । द्वित्रग्रामाधिपत्यद्रुहिणमदमपीदूषिताक्षक्षमाभृत्, सेवाहेवाकपाकं शमयतु भवतां कर्म शर्मप्रतीपम् ॥ ५७ ॥ पर्याप्तं मुक्तानि या प्रथयति कमलं या तिरोभाव्य भाति, सृष्टुस्सृष्टेर्दवीय कुवलमहितं या बिभर्ति स्वरूपम् । भूम्ना स्वेनान्तरिक्षं कवलयति च या सा विचित्रा विधत्तां, दैत्याराराति नाभिर्द्रविणपतिपदद्रोहिणीं संपदं वः ॥ ५८ ॥ धाणीयाङ्गैश्चतुर्भिस्सदसि सुमनसां द्योतमानस्वरूपा, याचन्तस्या मुरारेभिमतमखिलं श्रीरिव स्पर्शयन्ती । दुर्गेवोग्राकृतिर्या त्रिभुवन-

जननस्थेमसंहारधुर्या, मर्यादालम्बनं वः क्षपयतु महती हेतिवर्य-स्य नाभिः ॥ ५९ ॥ सम्भिरसन्तानजामिर्मधुरमधुरमस्पन्दसन्दोहिनीभिः, पाटीरैः प्रौढचन्द्रातपसुषमालोपनैर्लेपनैश्च। धूपैः कालागरूणामपि सुरसुदृशो विस्मयन्त्यो यस्याः, गन्धं रुन्धन्ति सा वधिरमसुरभिदो नाभिरव्यादभव्यात् ॥ ६० ॥ अंहस्संहत्य दग्ध्वा प्रतिजनिजनितं प्रौढसहारवन्या दुराब्धन्यानधन्यान्महति विनतिभिर्धामनि स्थापयन्ती। विश्रान्तिं शाश्वतीं या नयति रमयतां चक्रराजस्य नाभिः संयन्मोमुह्यमानात्रिदशरिपुदशासाक्षिणी साक्षिणी वः ॥ ६१ ॥ इति नाभिवर्णनं चतुर्थम्।

अथ अक्षवर्णनं पञ्चमम्—

श्रुत्वा यन्नामशब्दं श्रुतिपथकटुकं देवनक्रीडनेषु, सर्वैरिस्वैर-धत्यो भयविवशधियः कातरन्यस्तधाराः। मन्दार्थं यान्त्यमन्दं प्रति युवतिमुखैर्दर्शितोत्त्रासदर्पैः, अक्षं सौदर्शनं तत्क्षपयतु भवतामेध-मानां धनायाम् ॥ ६२ ॥ व्यस्तस्कन्धं विशीर्णप्रसवपरिकरं प्रतप्तपत्रोपमर्दम्, संयद्वर्षासु वर्षातुरखगपरिषत्पीतरक्तोदकासु। अक्षं रक्षस्तरूणामशनिवदशनैरापतन्मूर्ध्निमूर्ध्नि, स्तादक्षाधीशितुर्वः स्तवकितयशसे द्वेषिणां प्लोषणाय ॥ ६३ ॥ दीक्षां मङ्ग्रामसत्रे महति कृतवतो दीक्षिभिस्सहताभिः, जिह्वाले सप्तजिह्वे दनुजकुलहविर्जुह्वतो नेमिजुह्वा। वैकुण्ठास्त्रस्य कुण्डं महदिव निलसत्पिण्डकावेदिमध्ये, दिश्यादिश्यर्द्धिदेश्यं पदमिह भवतामक्षतोन्मेषमक्षम् ॥ ६४ ॥ तुङ्गद्दोरद्रिशृङ्गाद्भुजविजयिनः स्पष्टदानोद्यमानां, शत्रुस्तम्बेरमाणां शिरसि निपततः सत्त्वमुक्ताग्निपुञ्जे। रक्तैरभ्यक्तमूर्तेर्विदलनगलितैर्व्यक्तगौरायितर्द्धेः हर्यक्षस्यारिभङ्गं जनयतु जगतामीडितं क्रीडितं वः ॥६५ ॥ उन्मीलत्पद्मरागं कटकमिव धृतं वाहुना यन्मुरारेः दीप्तान् रश्मीन्दधानं नयनमिव यदुत्तारकं विष्टपस्य। चक्रे शार्करस्य यद्वा परिधिरभिर्दहधत्यहत्यामिवद्रा,

अक्षं पक्षे पतित्वा परिघटयतु वस्तदुरिष्टां प्रतिष्ठाम् ॥ ६६ ॥

भूतप्रभृतक्षत

सन्मितैरंशुभिर्म्यंशयघ्नीं, अक्षं चक्रस्य दत्तामेघशतशमनं दाशुषीं शेमुषीं वः ॥ ६७ ॥ पद्मोल्लासमग्रद - यज्जनयति जगतीमेघमाने प्रबोधां यस्सच्छायाममाना लसति परिसरे रोहिणी ताम्रकाम्या । नानाहेत्युसतरं प्रकटयति च यत्प्रास्तकृष्णप्रचार्ण त्रेधा भिन्नस्य धाम्नस्समुदय इव तत्पातु वश्चाक्रमक्षम् ॥ ६८ ॥ शोनैर्भिः पद्मरागद्रवसमसुपर्णैश्शोभमानावकाशम्, प्रत्यग्राशोकरागप्रतिभटवपुषा भूषितं पूरुषेण । अन्तः स्वच्छन्दमग्नोत्थितभृगुतनयं क्षत्रियाणां क्षतानां, आरब्धं शोणितौघैस्सर इव भवतो दिव्यहेत्यक्षमव्यात् ॥ ६९ ॥ मत्तानामिन्द्रियाणां कृतविषयमहाकाननक्रीडनानाम्, सृष्टं चक्रेश्वरेण ग्रहणधिषणया नारिघद्वारणानाम् । गम्भीरं यन्त्रगतं कमपि कृतधियो मन्वते यन्मदेयात्, अस्थूलां भंवित्र वस्त्रिजगदभिमतस्थूललक्ष तदक्षम् ॥ ७० ॥ प्राणादीन् सन्नियम्य प्रणिहित मनसां योगिनामन्तरङ्गे, तुङ्गं सङ्कोच्य रूपं विरचितदहराकाश कृच्छ्रासिवेत्न । प्रासं यत्पूरुषेण स्वमहिममदशे धाम कामप्रदं वः भूयात् तद्भुवस्स्वस्त्रयनरिवसितं पुष्कराक्षायुधाक्षम् ॥ ७१ ॥ विद्वान्वीक्षेण धाम्ना चरणनखभुवा वद्भासस मध्ये, चक्राध्यक्षस्य निम्नत्परिहसितजपापुष्पकोशान्प्रकाशान् । शुभ्रैरभ्रैरदभ्रैश्शरदिनत इतो व्योम विभ्राजमानं प्रातस्त्यादित्यरोचिस्ततमिव भवतः पातु गदाङ्कमक्षम् ॥ ७२ ॥ श्रीवाणीवाड्मृडान्यो विदधति भजनं शक्तयो यस्य दिक्षु प्राह व्यूहं यदाद्यं प्रथममपि गुणा भरती पाञ्चरात्री । घोरां शान्तां च मूर्तिं प्रथयति पुरुषः प्राक्तनैः प्रार्थनाभिः, भक्तानां यस्य मध्ये दिशतु तदनघामक्षमध्यक्षतां वः ॥ ७३ ॥ रक्षःपक्षेण रक्षत्क्षतममरगणं लक्ष्यलक्ष्यमार्जा, लक्ष्मी-

भर्त्सीयमाणां चलमथनभुजे वज्रशिक्षानपेक्षे । निक्षिप्य क्षिप्रमध्यक्षयति जगति यद्दक्षतां दिव्यहेतेः, अक्षामामक्षमां तत्क्षपयतु भवतामक्षजिह्नस्यमक्षम् ॥ ७४ ॥ इतिअक्षवर्णनं पञ्चमम् ।

अथ पुरुषवर्णनं षष्ठम् ।

ज्योतिश्चूडालमौलिस्त्रिनयनवदनष्षोडशोत्तुङ्गबाहुः, प्रत्यालीढेन तिष्ठन्नगरहरशराधारदङ्कोशरत्नौ । निष्पीडन स्वधाम्ना निखिलमपि जगत्क्षेमवन्निर्मिमाणः, भूयात् सौदर्शनो वः प्रतिभटपरुषः पूरुषः पौरुषाय ॥७५॥ वाणी पौराणिकी यं प्रथयति महितं प्रेक्षणं कैटभारेः, शक्तिर्यस्येषुदर्प्पानलपरशुमुख्यव्यापिनी तद्विभूत्याम् । कर्तुं यत्तत्त्वबोधो न निशितमतिभिर्नारदाद्यैश्च शक्यः, दैवीं वो मानुषीं च क्षिपतु स विपदं दुस्तरामस्त्रराजः ॥ ७६ ॥ रूढस्तारालवाले रुचिरदलचयः श्यामलश्मश्रुजालैः, ज्वालाभिस्सप्रवालः प्रकटितकुसुमो बद्धमध्ये स्फुलिङ्गैः । आशानां पादमूलं प्रकृतिमधुरया च्छायया तापहृद्यः, दद्यादुद्यत्प्रकाण्डः फलमभिलषितं विष्णुसङ्कल्पवृक्षः ॥ ७७ ॥ धाम्नामारम्भदानां निचयमिव चिरस्थायिनां द्वादशानां, मार्तण्डानां समूढं मह इव बहुलां रत्नभासामिवर्द्धिम् । आर्चिस्सङ्घातमेकीकृतमिव शिखिनां बाडवाग्रेसराणां, शङ्के यस्य रूपं स भवतु भवतां तेजसे चक्रराजः ॥ ७८ ॥ उग्रम्पश्याक्षमुद्यद्भ्रुकुटि समुकुटं कुण्डलिस्पष्टदंष्ट्रं, चण्डाखर्वांशुदण्डैस्स्फुटनलसमर्धामलक्ष्योरुकाण्डम् । प्रत्यालीढस्थपादं प्रथयतु भवतां पालनव्यग्रमग्र्ये, चक्रेशोऽकालकालेरितमदविकटाटोपलोपाय रूपम् ॥७९॥ चक्रं कुन्तं कृपाणं परशुहुतवहावङ्कुशं दण्डशक्ती, शङ्खं कोदण्डपाशौ हलमुसलगदावज्रशूलांश्च हेतीन् ।

दोर्भिस्तम्भापस्कन्दं धदतुलवलस्तम्भिताराजिदर्पः, व्यूहस्तेजोभिमानी नरकजिजयिनो जृम्भतां संपदे वः ॥ ८० ॥ पीतं केशे रिपोरप्यसृजि रथपदे सख्यिरस्युत्कटाक्षं, चन्द्राधःकारि यन्त्रे वपुषि च दलने मण्डले च सराङ्कम्। हस्ते यक्त्रे च हेतिस्तवकितमसमं लोचने मोचने च स्तादस्तोकाय धाम्ने सुरवरपरिपत्सेवितं दैवतं व ॥ ८१ ॥ चित्राकारः स्वचारैर्मितसकलजगज्जागरूकप्रतापः मन्त्रं तन्त्रानुरूपं मनसि कलयतो मानयन्नात्मगुह्यान्। पश्चाद्ग्रस्फूर्तिनिर्वर्तितरिपुविजयो धाम षण्णां गुणानां, लक्ष्मीं राजानन्स्पो वितनु भवतां चक्रवर्ती ॥ ८२ ॥ अक्षाघ्णाभ्रमालान्यरविवरलुठच्चन्द्रचण्डद्युतीनि, ज्वालाजालावलीढस्फुटदुडुपटली पाण्डुदिङ्मण्डलानि। चक्रान्ताक्रान्तचक्राचलचलितमहीचक्रवालावशेषाण्यस्त्रग्रामाग्रिमस्य प्रददतु भवतां प्रार्थितं प्रस्थितानि ॥ ८३ ॥ शूलं त्यक्तात्मशीलं घृणिरघृणघृणिः पट्टिसः स्पष्टमादः शक्तिश्शालीनशक्ति कुलिशमकुशलं कुण्ठधारः कुठारः। दण्डश्चण्डत्वशून्यो भवति तनु धनुर्यस्य रणाग्रे वः स्यात्, ग्रस्ताशेषास्त्रगर्वो रथचरणपतिः कर्मणे शर्मणाय ॥ ८४ ॥ क्षुण्णाजानेय वृन्दं क्षुभितरथगणं सत्वमाद्यम्यपूर्वं, स्वैलाम्बरं भेलाकलकल विगलत्पूर्वगीर्वाणगर्वम्। युद्धं यस्याग्रतायं रथचरणपतिः स्वैयमाँ वः प्रशस्ति, दुग्धां दुग्धाब्धिमागं भयविनशुनासीरनासीरवर्ती ॥८५॥ द्युयरोद्गालिमालिप्रहरणरममोचानिते वैनतेये, विद्राति द्राक्पुनः प्रधनभुवि परावर्तमानेन भग्ना। निर्जित्य प्रत्यनीकं निरवधिकचरद्रास्तिकाशीयरथ्यं, पथ्यं विश्वस्य दाधान् प्रथयतु भवतो हेतिरिन्द्रानुजस्य ॥ ८६ ॥ नन्दिन्यामन्दमूर्वे गलति गणपतौ व्याकुले बाहुलेये, चण्डे चाकिरपकुण्ठे प्रमथपरिषदि आमवत्यां प्रमाथम्। उन्निद्राऽऽर्जो बलिर्ह धन्विजभुजवनं यो ददावाद्रिभिक्षां, भिक्षां तत्प्राणरूपां स

भवदकुशलं कृष्णहेतिः क्षिणोतु ॥ ८७ ॥ रक्तौघाभ्यक्तमुक्ताफल लुलितलसद्वीचिवृद्धौ महाब्धौ, सन्ध्यासम्बद्धताराजलधरशबलाकाशनीकाशकान्तौ। गम्भीरारंभमम्भश्चरमसुरकुलं वेदविघ्नं विनिघ्नन्, निर्विघ्नं वः प्रसूतां व्यपगतविपदं सम्पदं चक्रराजः ॥८८॥ काशीविप्लोषचैद्यक्षपणधरणिजध्वंससूर्यापिधान, ग्राहद्वेधास्त्रमालित्रुटनमुखकथावस्तुसत्कीर्तिगाथाः। गीयन्ते किन्नरीभिः कनकगिरि गुहागेहिनीभिर्यदीयाः, देयादैतेयवैरी स सकलभुवनश्लाघनीयां श्रियं वः॥ ८९ ॥ नानावर्णान् विभूष्यन्विरचितभुवनानुग्रहान् विग्रहान्यः, चक्रेष्वष्टासु मृष्टासुरवरतरुणीकण्ठकस्तूरिकेषु। आताराद्वर्णमालावधिषु वसति यः पूरुषो वस्सवश्यात्, व्यश्वैरुद्धृतसत्त्वैरुदितमयहिर्ध्यान्तमध्यान्तवर्ती ॥ ९० ॥ द्वात्रिंशत्षोडशाष्टप्रभृति पृथुभुजस्फूर्तिभिर्मूर्तिभेदैः, कालाद्ये चक्रपद्के प्रकटितविभवः पञ्च कृत्यानुरूपम्। अर्थानामर्थितानामहरहरखिलं निर्विलम्बैर्विलम्बैः, कुर्वाणो भक्तवर्गं कुशलिनमवताद्वायुधग्रामणीर्वः ॥ ९१ ॥ कोणे र्णैस्सरोजैरपि कपिशगुणैष्षड्भिरुद्भिन्नशोभे, श्रीवाणीपूर्विकाभिर्दधति विक्रमतश्शक्तिभि केशवादीन्। तारान्ते भूपुरादौ रथचरण गदाशार्ङ्गखड्गाङ्किताशे, यन्त्रे तन्त्रोदिते वः स्फुरतु कृतपदं लक्ष्म लक्ष्मीसखस्य ॥ ९२ ॥ दंष्ट्राकान्त्या कडारे कपटकिटितनोः कैटभारेरधस्तात्, ऊर्ध्वं हासेन विद्धे नरहरिवपुषो मण्डले वासवीये। प्राक्प्रत्यक्मान्ध्यसान्द्रच्छविभरभरिते व्योम्नि विद्योतमानः, दैतेयोत्पातशंसी रविरिव रहयत्वस्ररागो रुजं वः ॥ ९३ ॥ कोणे क्वापि स्थितोऽपि त्रिभुवनविततश्चन्द्रधामाऽपि रूक्ष- रुक्मच्छायोपि कृष्णाकृतिरनलमयोऽप्याश्रितत्राणकारी। धामभारोऽपि दीप्तो दिनकररूचिरैरप्युल्लसत्तारकश्रीः, चक्रेशश्चित्रभूमा वितरतु विमतत्रासनं शासनं वः ॥ ९४ ॥ शुक्रश्शक! स्तवस्ते सदृदहन! कलां काल! तेऽर्य न कालः, किं वो रक्षांसि! रक्षा तव फलतु पतोयावक्षां पादसेवा

वायो! हृ ओऽभि भर्तुरत्यज घनद' मद सेव्यनां अर्थयति. प्राहु- र्धन्वपालास्म दनुजनिजमी हन्तु तन्त्रालतां च ॥९५॥ गायत्रय- र्णाररचके प्रथममनुमन्त्रमेरपत्रारविन्दे बिम्बं चक्षाक्षिकोणं वहति जयिजयाद्यष्टशक्तो निषण्णा । शोकं नोऽशोकमूले पदमविचल सद्गीमर्मीमाक्षर्मीमा.पुमो दिव्यरत्नाद्यामा पुरपदरिमयी भक्तिरस्यत्रयर्भ ॥९६॥ पाश्चात्याशोकपुष्पमकरनिपतितैः आमरागं परागैः.मन्त्री रोचिस्स्मगन्धैः स्वपदजधरं भेस्य तारासुपक्ष्म । पञ्चानाचक्रकोशा निज सुरनिर्हरत्नाल्लीन् कल्पमानान् , चक्रार्थोशोऽभिनन्दन् प्रदि शतु मदशीमुत्तमश्लोकतां वः॥९७॥ रक्ताशोकस्य वेदस्य न निहितपदं प्रासशाखस्य मूले, चक्रैस्त्वन्तदार्थैरपि मन्त्रितचतुद्विचतुर्बाहुदण्डम् । आसीनं भाममान -स्थितमपि भयास्यनयनां नरतमेकं पश्चात् पूर्वत्र भागे स्फुटतररहरितामानुपं जानुपादः ॥ ९८ ॥ प्राणे दत्तप्रयाणे मुषितदिशि दृशि त्यक्तसारे शरीरे, सत्यां व्यामोह वत्यां मरम मे मनसि व्याहृते व्याहृते चा चक्रान्तरेति मृत्युप्रतिभयमु भयाकारचित्र पवित्रं, तजेस्त्वचिमृता वचिद्दशकुलवनं तीक्ष्णं तीक्ष्णदंष्ट्रम् ॥ ९९ ॥ यस्मिन् विन्यस्य भारं विजयति जगतां जङ्गमस्थावराणां, लक्ष्मीनारायणाख्ये मिथुनमनुभवत्युदाराग्न् विहाराज । आरोग्य भूतिमायुः कृतमिह बहुना यद्यदाव्याप्तदं वः, तत्तत्सद्यःसमस्तं दिशतु स पुरुषो दिव्यहेत्यक्षवर्ती ॥ १०० ॥ पर्यानांतचयविधाद्गुमणिगिरिशवीथ्यङ्कमहद्यावराणां, अर्चिष्यङ्गपु नैम्यादिषु च परमतः पुंसि षड्विंशतेश्च । मद्वर्मसंदर्शन यः पठति कृतमिदं कूरनारायणेन, स्तोत्रं निर्विष्टभोगो भजति स परमां चक्रमायुज्यलक्ष्मीम् ॥ १०१ ॥ इति पुरपवर्णनं षष्टम् ।

सुदर्शनशतकं समाप्तम् ।

